॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

## तिङन्ते

# सन्नन्त-यङन्त-यङ्लुगन्ताश्च

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।




संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।




YouTube संस्कृतसारः @sanskrit sar


**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

02.06.2022

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आतिदेशिकधातुप्रकरणे
# सन्नन्तप्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते सन्नन्तप्रक्रिया)

राधा
पठितुम्(कर्म)
इच्छति।





❖ सन्प्रत्यय-विधायकं विधिसूत्रम्—

**सूत्रम्— धातोः कर्मणः समानकर्तृकादिच्छायां वा (३,१.७)**

अर्थः—इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्॥

❖ कर्मणः किम् ? गमनेनेच्छति।

❖ समानकर्तृकात् किम् ? शिष्याः पठन्त्वितीच्छति गुरुः।

❖ वा ग्रहणाद्वाक्यमपि॥

| शुद्धधातुः (भूवादयो धातवः) | आतिदेशिकधातुः (सन्नन्तधातुः) (सनाद्यन्ताः धातवः) |
|---|---|
| पठ् =पठति पढ़ता है। | पिपठिष =पिपठिषति पढ़ने की इच्छा करता है। |
| लिख्=लिखति | लिलिखिष |
| पच् | पिपक्ष |
| गम् | जिगमिष |
| भुज् | बुभुक्ष |
| दृश् | दिदृक्ष |

समानकर्तृकाद्धातोरिच्छार्थे सन् भवेत् खलु।
इच्छाया यो भवेत् कर्ता कर्मणोऽपि स एव चेत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सन्नन्ते 'पठ्'धातोः प्रक्रिया



- पठँ व्यक्तायां वाचि॥१॥

❖ द्वित्व-विधायकं विधिसूत्रम्—

सूत्रम्— सन्यङोः (६,१.९)

अर्थः— सन्नन्तस्य यङन्तस्य च धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। सन्यतः। पठितुमिच्छति पिपठिषति।

- इडागमस्य निर्णयः। (मूलधात्वनुसारम्)
- सन्नन्तस्य द्वित्वम्। हलादिधातोः प्रथमैकाचः। अजादेः द्वितीयस्यैकाचः।
- पदव्यवस्था मूलधातुवद् भवति। मूलधातोः परस्मैपदित्वे परस्मैपदम् आत्मनेपदित्वे आत्मनेपदम् उभयपदित्वे उभयपदम्।
- यथासूत्रं कित्त्वविधानम्।

पठ्+ सन्
पठ्+ स (आर्धधातुकसंज्ञा)
पठ् इ+ ष (इट्,षत्वम्)
पठ् इ+ ष (इट्,षत्वम्)
पठ् पठ् इ+ ष (सन्यङोः)
प पठ् इ+ ष (अभ्यासकार्यम्)
पि पठ् इ+ ष (सन्यतः)
पिपठिष (सनाद्यन्ता: धातवः)
पिपठिष अ+ ति (अतो गुणे)
पिपठिषति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सन्नन्ते 'अद्-कृ'धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते सन्नन्तप्रक्रिया)

➤ लुङ्सनोर्घसॢँ॥

❖ तकारादेश-विधायकं विधिसूत्रम्—

सूत्रम्— सः स्यार्धधातुके (७,४.४९)

अर्थः— सस्य तः स्यात्सादावार्धधातुके। अत्तुमिच्छति जिघत्सति। एकाच इति नेट्॥

❖ दीर्घ-विधायकं विधिसूत्रम्—

सूत्रम्— अज्झनगमां सनि (६,४.१६)

अर्थः— अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि॥

कृ+ स (आर्धधातुकसंज्ञा)

कॄ+ स (अज्झनगमां सनि)

सार्वधातुकार्धधातुकयोः— गुणे प्राप्ते

अद्+ स (आर्धधातुकसंज्ञा)

घस्+ स (लुँङ्सनोर्घस्लृँ)

घत्+ स (सः स्यार्धधातुके)

घत्स

घत् घत्+ स (सन्यङोः)

झ घत्+ स (अभ्यासकार्यम्)

जघत्+ स (अभ्यासकार्यम्)

जिघत्स (सन्यतः)

जिघत्स अ+ ति (अतो गुणे)

जिघत्सति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सन्नन्ते 'कृ-भू'धातोः प्रक्रिया



❖ किद्वद्भाव-विधायकं अतिदेशसूत्रम्—

सूत्रम्— इको झल् (१,२.९)

अर्थः— इगन्ताज्झलादिः सन् कित् स्यात्। ऋत इद्धातोः। कर्तुमिच्छति चिकीर्षति॥

❖ इण्निषेधकं विधिसूत्रम्—

सूत्रम्— सनि ग्रहगुहोश्च (७,२.१२)

अर्थः— ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात्। बुभूषति॥

॥ इति सन्नन्तप्रक्रिया॥

कृ+ स (इको झल् — कित्वम्) गुणनिषेधः
कीर्+ स (ऋत इद्धातोः, हलि च— दीर्घः)
कीर्ष
की कीर्ष

चिकीर्ष
चिकीर्षति

भवितुमिच्छति—
भू+ स (आर्धधातुकसंज्ञा)
भूस
भूभूस
बुभूष
बुभूषति

संस्कृतसारः
सिद्धान्ते सर्वसंज्ञायाः

# आतिदेशिकधातुप्रकरणे
# यङन्तप्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते यङन्तप्रक्रिया)

धातोः
- एकाचः
- हलादिः
- क्रियासमभिहारे पौनःपुन्ये भृशार्थे

❖ यङन्तेभ्य आत्मनेपदमेव भवति।

भू+ यङ्
भू+ य(आर्धधातुकत्वाद्गुणे प्राप्ते क्ङिति चेत्यनेन निषेधे)
भू भू+ य (सन्यङोः)
बु भू+ य (अभ्यासकार्यम्)
बो भू+ य (गुणो यङ्लुकोः)
बोभूय+ त (अनुदात्तङित....)
बोभूयते

एकस्वरसमायुक्ताद् धातोर्व्यञ्जनपूर्वकात्।
पौनःपुन्ये तथात्यर्थे प्रायशो यङ् विधीयते॥

❖ यङ्प्रत्यय-विधायकं विधिसूत्रम्—

सूत्रम्— धातोरेकाचो हलादेः क्रियासमभिहारे यङ्(३,१.२२)

अर्थः— पौनःपुन्ये भृशार्थे= अतिशयार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात्॥

❖ गुणविधायकं विधिसूत्रम्—

सूत्रम्— गुणो यङ्लुकोः (७,४.८२)

अर्थः— अभ्यासस्य गुणो यङि यङ्लुकि च परतः।

ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# यङन्ते गत्यर्थकस्य 'व्रज्'धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते यङन्तप्रक्रिया)

❖ यङ्-विधानार्थं नियमसूत्रम्—

**सूत्रम्—** नित्यं कौटिल्ये गतौ (३,१.२३)

**अर्थः—** गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे॥

❖ दीर्घ-विधायकं विधिसूत्रम्—

**सूत्रम्—** दीर्घोऽकितः (७,४.८३)

**अर्थः—** अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः। कुटिलं व्रजति— वाव्रज्यते॥

❖ यशब्दस्य-लोपविधायकं विधिसूत्रम्—

**सूत्रम्—** यस्य हलः (६,४.४९)

**अर्थः—** यस्येति सङ्घातग्रहणम्। हलः परस्य यशब्दस्य लोप आर्धधातुके। आदेः परस्य। अतो लोपः। वाव्रजाञ्चक्रे। वाव्रजिता॥

व्रज्+ य
व्रज् व्रज् + य (सन्यङोः)
व व्रज्+ य (अभ्यासकार्यम्)
वाव्रज्य (दीर्घोऽकितः)
वाव्रज्य अ + त
वाव्रज्यते

यङन्ते गमनार्थकाः कौटिल्यार्थे

- चाचल्यते
- दाधाव्यते
- सरीसृप्यते
- जङ्गम्यते

वाव्रज्य आम्+ लिँट् (आर्धधातुकम्)
वाव्रज् अ आम्+ लिँट् (यस्य हलः)
वाव्रज् आम्+ लिँट् (अतो लोपः)
वाव्रज् आम्+ कृ कृ + ए

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# यङन्ते 'वृत्-नृत्-ग्रह्'धातूनां प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते यङन्तप्रक्रिया)

❖ रीगागम-विधायकं विधिसूत्रम्—

सूत्रम्— **रीगृदुपधस्य च (७,४.९०)**

अर्थः— ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवर्तिता॥

❖ णत्वनिषेधकं विधिसूत्रम्—

सूत्रम्— **क्षुभ्नादिषु च (८,४.३९)**

अर्थः— णत्वं न। नरीनृत्यते। जरीगृह्यते॥

॥ इति यङन्तप्रक्रिया॥

- धातोरभ्यासस्थितस्य इ/उकारयोर्गुणः। यथा— बेभिद्यते, बोभूयते।
- धातोरभ्यासस्थितस्य अकारस्य दीर्घः। यथा— पापाच्यते, पापाठ्यते।
- ऋदुपधस्य अथवा ऋकारान्तस्य धातोः 'रीक्'आगमः। यथा— दरीदृश्यते।
- अनुनासिकान्तधातोरभ्यासस्य नुगागमः। यथा— नंनम्यते, तन्तन्यते।
- पत्-पद् इत्यादिधातूनां कृते नीगागमः। यथा— पनीपत्यते, पनीपद्यते।

वृत् वृत् + य (सन्यङोः)
व वृत् + य (अभ्यासकार्यम्)
वरी वृत्य अ + ते
**वरीवृत्यते**

नृत् नृत् + य
न नृत् + य
नरी नृत्य अ + ते
**नरीनृत्यते**

ग्रह् + य
गृह् + य (ग्रहिज्या..)
गृह् गृह् + य
ज गृह् + य
जरी गृह्य अ + ते
**जरीगृह्यते**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# यङ्लुक्प्रक्रियायां स्मरणीयांशाः



❖ यङ्लुक्-विधायकं विधिसूत्रम्—

**सूत्रम्— यङोऽचि च (२,४.७४)**

अर्थः— यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं विनापि क्वचित्।

अयं भावः— लोलूय+अच् > लोलू+अ= लोलुव इत्यादिषु अच्प्रत्यये परे लुक् भवति। किन्तु 'यङोऽचि च' इति सूत्रस्थ-चकारेण 'बहुलं छन्दसि'-२,४.७३ इति सूत्राद् बहुलमिति पदानुवर्त्तनात् तस्य क्वचिदन्यदेव इत्यंशेन अच्प्रत्ययं विनापि क्वचित्प्रयोगेषु लुक् स्यात्।

प्रश्नः— 'भू+य' इत्यत्रादौ यङो लुक्स्याद् द्वित्वं वा ?

❖ उ.— अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति।

❖ अयं भावः— यस्य विधेः किमपि निमित्तं न भवति, स अनैमित्तिकविधिः अन्तरङ्गः, यथा 'यङोऽचि चे'त्यस्य लुग्विधिः। एतस्माद्भिन्नविधिर्बहिरङ्गः, यथा 'सन्यङो' इत्यस्य द्वित्वं हि एकाचाद्यनेकं निमित्तमपेक्षते अतो बहिरङ्गः। 'असिद्धं बहिरङ्गमन्तरङ्गे'= अन्तरङ्गशास्त्रस्य विषये बहिरङ्गशास्त्रमसिद्धं भवति। एतेन द्वित्वात्पूर्वं यङ्लुग्भवति।

➢ प्रश्नः— 'भू+य' इत्यत्र यङो लुकि द्वित्वं कथं सम्भवति ?

❖ उ.— ततः= यङो लुगनन्तरं प्रत्ययलक्षणेन= प्रत्ययलोपे प्रत्ययलक्षणमित्यनेन यङन्तत्वाद्द्वित्वम्। (अत्र द्वित्वकार्यम् अङ्गकार्यं न अतः 'न लुमताङ्गस्य' इत्यनेन प्रत्ययलक्षणं न निषिध्यते।) द्वित्वे कृते—भू भू इति जाते

# यङ्लुक्प्रक्रियायां स्मरणीयांशाः



❖ **अभ्यासकार्यम्।** बोभू इति जाते (गुणो यङ्लुकोः)

➢ प्रश्नः— 'बोभू' इत्यत्र यङ्लुकि 'सनाद्यन्ता धातव' इत्यनेन कथं धातु सञ्ज्ञा?

❖ उ.— (एकदेशविकृतन्यायेन) **धातुत्वाल्लँडादयः।** अथवा चर्करीतमिति यङ्लुगन्तस्य सञ्ज्ञा, तेन 'चर्करीतं च' इति गणसूत्रस्य अदादिगणे पाठात् 'भूवादयो धातवः' इत्यनेनापि धातुसञ्ज्ञा सिद्ध्यति। बोभू+लँट् इति जाते—

➢ प्रश्नः— 'बोभू+लँट्' इत्यत्र आत्मनेपदं परस्मैपदं इत्यनयोः किं स्यात्?

❖ उ.— **शेषात्कर्तरीति परस्मैपदम्।**

अयं भावः— प्रत्ययलक्षणेन 'बोभू' इति यङ्लुगन्तस्य ङिदन्तं नैव वक्तुं शक्यते,यतोहि ङित्वं प्रत्ययाप्रत्ययस्य साधारणधर्मो वर्त्तते। यथा ङित्वं यङादिप्रत्ययेषु वर्त्तते, तथैव शीङादिधातुषु चित्रङादिप्रातिपदिकेष्वपि ङित्वं वर्त्तते। अत एतादृशोभयवृत्तिङित्वस्य प्रत्ययलक्षणं न भवति। यो धर्मः प्रत्ययमात्रवृत्ति तत्रैव 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यस्य प्रवृत्तिर्भवति, इत्यस्मात्कारणाद् 'बोभू' इत्यत्र ङित्वं नागच्छति तेन 'अनुदात्तङित आत्मनेपदम्' इत्यनेन आत्मनेपदं न भवति। अतो यङ्लुकि 'शेषात्कर्तरीति परस्मैपदम्' इत्यनेन परस्मैपदमेव जायते।

❖ 'चर्करीतं च' इति गणसूत्रम् अदादिगणे परस्मैपदिधातुमध्ये पठितं तेन ज्ञायते यङ्लुग्धातुभ्यः परस्मैपदमेव भवति।

❖ अन्यादृशप्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं निपातनम् । 'दाधर्ति-दर्धति-दर्धर्षि-बोभूतु-तेतिक्ते..' इति सूत्रे 'तेतिक्ते' इत्यत्रात्मनेपदं निपात्यते। यदि स्वतः सिद्धमात्मनेपदं तर्हि निपातनस्य का आवश्यकता ? तेनेदं सिद्धं यद् यङ्लुगन्तात् परस्मैपदमेव । 'बोभू+ति' स्थिते—

# भूधातोः प्रक्रिया



➤ प्रश्नः—यङ्लुग्धातुषु कः विकरणप्रत्ययः?

❖ 'चर्करीतं चे'त्यदादौ पाठाच्छपो लुक्॥

शपि कृते 'बोभू अ+ति' स्थिते चर्करीतमिति यङ्लुगन्तस्य सञ्ज्ञा। चर्करीतं चे'ति गणसूत्रस्य अदादौ पाठात् शपो लुक्कृते 'बोभू +ति' इति जाते —

❖ ईट्-विधायकं विधिसूत्रम्—

**सूत्रम्— यङो वा (७,३.९४)**

**अर्थः—** यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात्। बोभवीति, बोभोति। बोभूतः। अदभ्यस्तात्। बोभुवति।

'बोभू + ईति' इति जाते ततः 'सार्वधातुकार्धधातुकयोः' इति सूत्रेण ऊकारस्य गुणे कृते 'बोभो + ईति' ततः अवादेशे कृते 'बोभवीति' सिद्ध्यति। ईडभावे गुणे कृते 'बोभोति' इत्यपि प्रथमैकवचने सिद्ध्यति।

➤ प्रश्नः— बोभवीति, बोभोति इति प्रयोगद्वये 'भूसुवोस्तिङि' इति सूत्रेण गुणनिषेधः कथं न भवति ?

❖ उ.—भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न, 'बोभूतु-तेतिक्ते' इति छन्दसि निपातनात्।

अत्र भाष्यम्— बोभूतु इत्यत्र किं निपात्यते? भवतेर्यङ्लुगन्तस्य अगुणत्वं निपात्यते। नैतदस्ति प्रयोजनम्। सिद्धमत्रागुणत्वं 'भूसुवोस्तिङि'ति। एवं तर्हि नियमार्थं भविष्यति— अत्रैव= छन्दस्येव यङ्लुगन्तस्य गुणो न भवति, नान्यत्र= लौकिकसंस्कृतभाषायां गुणनिषेधो न भवतीति भावः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भूधातोः प्रक्रिया



- बोभवाञ्चकार, बोभवामास।
- बोभविता। बोभविष्यति।
- बोभवीतु, बोभोतु, बोभूतात्। बोभूताम्। बोभुवतु। बोभूहि। बोभवानि।
- अबोभवीत्, अबोभोत्। अबोभूताम्। अबोभवुः।
- बोभूयात्। बोभूयाताम्। बोभूयुः।
- बोभूयात्। बोभूयास्ताम्। बोभूयासुः।
- गातिस्थेति सिचो लुक्। यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्— अबोभूवीत्, अबोभोत्। अबोभूताम्। अबोभूवुः।
- अबोभविष्यत्

॥इति यङ्लुक्प्रक्रिया॥

बोभू च्लिँ+ त्
बोभू स्+ त्
बोभू + त् (गातिस्था..)
बोभू + ईत् (यङो वा)
बोभूव् + ईत् (भुवो वुग्लुँङ्लिँटोः) ईडभावे गुणे कृते—
अबोभूवीत्, अबोभोत्

- कृताकृतप्रसङ्गित्वं नित्यत्वम् अत्र गृह्यते।
- सार्वधातुकार्धातुकयोः—७.३.८४
- भुवो वुग्लुँङ्लिँटोः— ६.४.८८

# सन्नन्त-यङन्त-यङ्लुगन्तानां परीक्षणम्

**०१. एतेषु सन्प्रत्ययविधायकं सूत्रं किम्?**

क. सन्यङोः

ख. सन्यतः

ग. धातोः कर्मणः समानकर्तृकादिच्छायां वा

घ. सनि ग्रहगुहोश्च

**०२. 'गमनेन इच्छति' इत्यत्र सन्प्रत्ययो न भवति तस्य प्रमुखं कारणं किम् ?**

क. अत्र इच्छार्थो नास्ति।

ख. इच्छाक्रियायाः कर्म गमनं नास्ति।

ग. समानकर्तृकत्वाभावात्

घ. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सूत्रे वा ग्रहणात्।

**०३.'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सूत्रे वा ग्रहणस्य किं फलम् ?**

क. सन्प्रत्ययस्य विकल्पः पक्षेऽन्यप्रत्ययः।

ख. अनिच्छार्थेऽपि क्वचित्सन्प्रत्ययः।

ग. विग्रहवाक्यमपि साधुः।

घ. प्रातिपदिकादपि सन्प्रत्ययः।

**०४. अत्तुमिच्छति इत्यस्य किं रूपम् ?**

क. जिघत्सति

ख. अत्सति

ग. अदिदिषति

घ. अदित्सति

**०५. एतेष्विदं सूत्रं 'चिकीर्षति' इत्यत्र न प्रवर्त्तते—**

क. अज्झनगमां सनि

ख. इको झल्

ग. ऋत इद्धातोः

घ. सार्वधातुकार्धधातुकयोः

**०६. बुभूषति इत्यत्र इण्निषेधः केन सूत्रेण—**

क. एकाच उपदेशेऽनुदात्तात्

ख. क्षुभ्नादिषु च

**ग. सनि ग्रहगुहोश्च**

घ. ऋतो भारद्वाजस्य

**०७. यङ्प्रत्ययविषये इदं कथनम् असङ्गतम्—**

क. अयम् एकाच्धातुभ्य एव भवति।

ख. अयमतिशयार्थे भवति।

**ग. अयमजादिधातुभ्यो भवति।**

घ. अयं पौनःपुन्यार्थे भवति।

**०८. यङन्तधातुभ्यो भवति—**

**क. आत्मनेपदम्**

ख. परस्मैपदम्

ग. उभयपदम्

घ. स्वपदम्

**०९. गत्यर्थकधातुभ्यः यङ्प्रत्ययः कस्मिन्नर्थे भवति—**

क. स्वार्थे

**ख.कौटिल्यार्थे**

ग. पौनःपुन्यार्थे

घ. भृशार्थे

१०. 'वाव्रजाञ्चक्रे' इत्यत्र यलोपः केन—

क. इको झल्

ख. अकः सवर्णे दीर्घः

ग. अकृतसार्वधातुकयोः

**घ. यस्य हलः**

**११. यङि पुनःपुनः अतिशयेन वा वर्त्तते—**

क. वरीवर्त्तते

**ख.वरीवृत्यते**

ग. वर्वर्तते

घ. वरिवृत्यते

**१२. 'नरीनृत्यते' इत्यत्र णत्वाभावः कस्मात्—**

क. अपादान्तत्वात्

ख. णो नः

**ग. क्षुभ्नादिषु च**

घ. यङन्तत्वात्

**१३. 'जरीगृह्यते' इति कस्य धातो रूपम्—**

**क.ग्रह्**

ख. गृह्

ग. जागृ

घ. जॄ

**१४. 'गम्'धातोः यङि किं रूपम्—**

क. जगम्यते

ख. जरीगम्यते

ग. जङ्गम्यते

घ. जग्यम्यते

**१५. 'वृत् वृत् + य' इत्यत्र द्वित्वं केन सूत्रेण—**

क. लिँटि धातोरनभ्यासस्य

ख. चङि

ग. यङि च

**घ. सन्यङोः**

**१६ 'यङोऽचि च' इति सूत्रे चकारेण किं गृह्यते?**

क. यङ्प्रत्ययाभावः

ख. द्वित्वम्

**ग. यङ्प्रत्ययेन विनापि लुक्**

घ. परस्मैपदम्

**१७. यङ्लुक्प्रक्रियायाम् आदौ एतेषु किं कार्यं भवति—**

क. द्वित्वम्

**ख.यङ्लुक्**

ग. लडादयः

घ. शपो लुक्

**१८. सर्वदा परस्मैपदमेव भवति—**

क. णिजन्तेभ्यः

ख. सन्नन्तेभ्यः

ग. यङन्तेभ्यः

**घ. यङ्लुग्भ्यः**

**१९. 'चर्करीतमि'ति कस्य सञ्ज्ञा—**

क. यङन्तस्य

**ख.यङ्लुगन्तस्य**

ग. परस्मैपदस्य

घ. अदादिगणस्य

**२०. 'यङो वा' इति सूत्रेण विधीयते—**

क. यङ्

ख. यङ्लुक्

ग. इट्

**घ. ईट्**

**२१ 'भूसुवोस्तिङि'ति सूत्रेण बोभोति इत्यत्र गुणनिषेधः कस्मान्न भवति?**

क. क्क्ङिति च इति कित्वात्

ख. 'यङो वा' इति कारणात्

ग. 'बोभूतु' इति छन्दसि निपातनात्

घ. सार्वधातुकत्वात्

**२२. एतेषु 'अदभ्यस्तात्' इति सूत्रस्य प्रवृत्तिर्भवति—**

क. बोभवीति

ख. बोभूतः

**ग. बोभुवति**

घ. बोभविता

**२३. यङ्लुकि भूधातोः लुँङि किं रूपम्—**

क. अबोभविष्यत्

**ख.अबोभोत्**

ग. अबोभवीत्

घ. अबोभवुः

**२४. 'अबोभूवीत्' इत्यत्र कस्माद्धेतोः वुग् गुणं बाधते—**

**क. नित्यत्वात्**

ख. परत्वात्

ग. अन्तरङ्गत्वात्

घ. अनवकाशत्वात्

**२५. बुभूषति इत्यस्य विग्रहवाक्यं किम्—**

क. भोक्तुमिच्छति

**ख.भवितुमिच्छति**

ग. भूषितमिच्छति

घ. बुभुक्षितुमिच्छति